# स्वराष्टक शिक्षा

श्री हरिः । ओम् साम्ब
अऽइऽउऽऋऽऌऽएऽऐऽओऽऔऽ इति स्वराः १

पदान्तपदाद्योः सन्धिः

पदान्तपदाद्योय्येऽएकः प्राणयोगः स सन्धिसञ्ज्ञः स्यात् । न परकालः पूर्वकाले । पुनः पूर्वकालसन्धिः विधाने परकालसन्धिं न प्राप्नोति । एकम् १
अऽआमपरे ॥ तव अयम् । तवायम् २
एकारमिवर्णे । तव इदम् । तवेदम् ३
ओकारमुवर्णे तवऽउरुस्तवोरुः ४
आऽअमृकारे ॥ स्वाहाऽऋषभम् ॥ स्वाहऽऋषभम् ५
ऐकारमे ऐपरत्वे । तवऽएतत् ॥ तवैतत् ॥ तवऽऐ श्वर्यं ॥ तवैश्वर्य्यम् ६
औकारमोऽ औपरत्वे ॥ तवऽओजः । तवौजः ॥ प्रऽऔक्षन् । प्रौक्षन् ७
इर्य्यं स्वरे ॥ व्वाजीऽअर्वन् ॥व्वा ज्ज्यर्वन् ॥ विऽ ऊर्णुषे ॥ व्यूर्णुंषे ॥ असिऽऋतस्य ॥ अस्यृतस्य ८
इरिमिवर्णे ॥ विऽइत ॥ व्वीत ९
उर्व्वं स्वरे ॥ नुऽइन्द्र । न्विन्द्र १०
उरुमुवर्णे ॥ अनुऽउत् ॥ अनूत् ११
ऋकारो रेफं स्वरे ॥ धातृ अंशः ॥ धात्रंशः १२
ऋवर्णऽऋकारमृवर्णे ॥ होतृऽऋकारः । होतृकारः १३
एकारोऽयं स्वरे ॥ अग्नेऽआयाहि ॥ अग्नऽआया हि १४
ओकारोऽवं स्वरे ॥ विष्णोऽएते ॥ विष्णावेते १५
ऐरावं स्वरे ॥ भुम्यैऽआखन् ॥ भूम्याऽआखन् १६
औ रावं स्वरे ॥ उभौऽइन्द्रौ ॥ उभाविन्द्रौ १७

ओपराकारो लोपम् ॥ अदब्धायोऽअशीतम् ॥
अदब्धायोऽशीतम् १८
तत्राद्यलक्षणम् ॥ एपराकारो लोपम् ॥ तेऽअवन्तु ॥
तेवन्तु १९
वो लोपमुऽओऔषु । उभौऽउ ॥ उभाऽउ ॥
उऽओऽऔष्विति किम् । पलक्यावहोरात्रे । २० २
इत्यनन्तकृताच्सन्धिः

## अथ स्वरप्रकरणम्

उदात्तानुदात्तस्वरितप्रचयाः स्वराः १
अताम्र उदात्तः २
यथा । शम् । प्र । नु । द्वितीयस्य । यथा ।
अधो रक्तोऽनुदात्तः ॥ रुद्रऽईडे ३
तृतीयस्य च यथा । उपरि रक्तस्तिर्यग्रक्तो वा स्वरितः ।
स्वः । स्वः । स्वः ४
न्युब्ज पराऽअताम्राऽउदात्ताः । स्वाहा । स्वर्णार्कः ५
चतुर्थस्य च यथा । स्वरितपराऽअताम्राः प्रचयाः ।
त्र्यम्बकँय्यजामहे ६
स्वरितः पञ्चधा ॥ जात्याभिनिहितक्षैप्रप्रश्लिष्टभेदात् ।
एकपदे नीचपूर्व्वेऽपर्व्वो वा यवान्यतर युक्तो जात्यः ।
धान्यम् । स्वः ७
उदात्तादेशेरचोऽभिनिहितस्वरितो भवत्यकारलोपे सति ।
तेऽअवन्तु । तेवन्तु । वेदः असि । वेदोऽसि ८
उदात्तऽइऽउस्थाने यवयोः परोऽनुदात्तः क्षैप्रः । यु
योद्धयस्मत् । नुऽइन्द्र । न्विन्द्र ९
उदात्तानुदात्तयोर्ह्रस्वयोः स्थानेऽइकारः प्रश्लिष्टः ॥

विऽइत । व्वीत १०
अनुदात्तपूर्वजात्यादयश्चत्वारः पितृदानवद्धस्तम् ॥
वायव्यै ऽः ॥ भुवः स्वः ॥ ते ऽवन्तु ॥ वेदोऽसि ॥
अभ्यभि ॥ योजान्विन्द्र ॥ दिवीव ११
अनुदात्तपूर्वजात्यादयश्चत्वारो मनुष्यदानवदुदात्ते ॥
भूर्भुवःऽ स्वद्यौःऽ । सदन्य मिति ॥ रुद्रेभ्यो ये न्तरिक्षे
॥ स्तपोस्यूर्णम् । यु योद्धयस्मत् ॥ अप्स्वन्तः ।
दिवीवेति १२
अनुदात्तऽउदात्तस्वरितयोः । येभि ॥ स्वर्ण येऽभि ॥
सोऽहम् ॥ यार्वन्तरिक्षम् । व्वीदम् । स्वस्तभितं
स्तभितं स्वः स्वस्तभितम् १३
अननुदात्तपूर्वजात्यादयश्चत्वारः कर्णमूलेऽ उदात्त-
स्वरितपरत्वाऽभावे ॥ न्यङ् ॥ स्वः । तेऽवन्तु ।
सोऽस्मि । त्र्यम्बकम् न्विन्द्र ॥ व्वीत १४
उदात्तात्परानुदात्तं स्वरितम् । इषे त्त्वा १५
नोदात्तस्वरितपरत्त्वे । इषे त्वोर्ज्जे । ई शा वास्यम् ।
स्वरितादनुदात्तानां प्रचयः । व्वायवस्थ १६
नोदात्तस्वरितपरत्त्वे । व्वायवस्थ देवः । व्वास्यमिदम्
१७
उदात्तवानेकी ह्युदात्तः । प्रऽअर्प यतु । प्रार्प्पयतु १८
उदात्तान्निहितस्वारः स्वरितात्प्रचयो भवेत्
उदात्तात्स्वरितात्पूर्वो नान्यऽआपद्यते स्वरः १९ ३

इति स्वराङ्कुशः

कुचैलिनं दन्तमलोपधारिणम्बह्वाशनन्निष्ठुरभाषिणम्
सूर्योदये चास्तमये च शायिनञ्जहाति लक्ष्मीरपि
चक्रधारिणम् १ ४

अथ हस्तप्रक्षेपलक्षणम्

अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्तऽ उदाहृतः । स्वरितः
कर्णमूले स्यान्नासाग्रे प्रचयस्स्मृतः ३ । इषे त्वा ।
वायव स्थ । उदात्तादनुदात्ते तु वामाया भ्रुवऽआरभेत् ।
इषे त्त्वोर्जे । उदात्तात्स्वरिते चैव क्रमाद्दक्षिणतो न्यसेत्
४ इषे त्वा ५ ५

इत्यनन्तकृत स्वराष्टकम्

कटतपा गडदबानशि । ऊर्क् असि । ऊर्ग्गसि ।
सम्राट् असि । सम्राडसि । उत्त्वयम् । उद्वयम् ।
त्रिष्टुप् इति । त्रिष्टुबिति १ कटतपा ङणनमाः पञ्चमे ।
व्वाक् मनः । वाङ्मनः । व्वट्महान् । व्वण्महान् ।
तत् मित्रस्य । तन्मित्रस्य । अनुष्टुम्मात्या १ तदनाश्च
जञाः शचवर्गयोः तत् चित्रम् । तच्चित्रम् । तत् जुषस्व
। तज्जुषस्व । आदित्यान्श्मश्रुभिऽः । तो लँल्ले ।
परिचित् । लोकम् । परिचिल्लोकम् ४ अनुनासिको
लँल्ले । तान् लोकान् । ताँल्लोकान् ५ ह्रस्वपरङ्नौ
द्विर्भावं स्वरे । दध्यङ् ऋषिः । दध्यङ्ङृषिः ।
अश्मन् । ऊर्जम्ँ ६ नः शञ्चच्छयोः पूर्वश्चानुनासिकम् ।
अहीन् च । अहीँश्च ७ नः सन्तथयोः पूर्वश्चानुनासिकम्
। तान् । त्वम् । ताँस्त्वम् ८ मः परपञ्चमं स्पर्शे
। व्रतङ्करणात । व्रतञ्चरिष्यामि । अपाम्फेनेन ४ ङौ

त्ताभ्यां सकारे । ङौ कागमतागमौ प्राप्नुतः सकारे । प्राङ्सोमः । प्राङ्क्सोमः । त्रीन् समुद्रान् । त्रीन्त्समुद्रान् १० मोऽनुनासिकयवलान्यवलेषु । सम् । यौमि । सँय्यौमि । तम् व्वऽः । तँव्वः । तम् लोकम् । तँल्लोकम् ११ मः ग्रं कारं शषसहरेफेषु । सं शिवम् । हवींष्या । सं शिशाधि । संसः । अपांरितांसि १२ झयः परः शश्छसि । तत् । शुक्रम् । तच्छुक्रम् १३ । झयः परो हः चतुर्थम् । भिषक् । होमः । भिषग्घोमः । तत् । हविः । तद्धविः । सम्राट् होमः । सम्म्राड्ढोमः १४ स्वरपरसँयोगादिर्द्विः । इषे त्वा इषे त्त्वा १५ रहाभ्याम्परः । सूर्य्यम् बाह्यम् १६ स्पर्शश्चोष्मान्तस्त्थाभ्यः । व्वायवस्थ । व्वायवस्त्थ १७ ६

## इत्यनन्तकृतो हल्सन्धिः

अपरविसर्ग ऽ उ ऽ अहशोः । शिवः । असि । शिवोऽसि । देवेभ्यः । हविः । देवेभ्यो हविः । १
अपरो लोपमऽआपरत्वे । देवाःऽ । अत्र । देवाऽअत्र । देवाःआशाऽः । देवाऽआशाऽः २
अपरो लोपमा परत्त्वे । देवःऽआशाःऽ । देवऽआशाऽः ३
आपरो लोपं हशि । देवाःऽ । हसन्ति । देवा हसन्ति ४
अआपरो लोपमिचि । देवाःऽ । इह । देवऽ इह । अग्न्याः । इन्द्राय । अग्ध न्याऽ इन्द्राय ५
रेफत इच्यरश्च रेफमशि । सवितःऽ जजान । सवितर्ज्जजान । अग्निःऽ एकाक्षरेण । अग्निरेकाक्षरेण ६
रेफजेच्यरौ लोपं रेफे पूर्व्वश्च दीर्घम् । प्रातःऽरात्रिः ।

प्राता रात्रिः । रुरुः रौद्रःऽ । रुरू रौद्रःऽ ७
स्यसऽएषविसर्गो लोपंव्यञ्जने । एषः स्यः । एष स्यः
। स्यः । रात्थ्यः । स्यरात्थ्यः । सः । नऽः ।
स नः ८
सः ते । सस्ते । नमः ते । नमस्ते ९
तच्छपरत्वे शम् । व्वाजः च । व्वाजश्च १०
लोपङ्खर्प्परे शरि । अन्धऽः स्थ । अन्ध स्त्थ ११ ७

इति विसर्गसन्धिः

। अऽ इऽ उण् १ ऋऌक् २ एओङ् ३ ऐऔच् ४
हयवरट् ५ लण् ६ ञमङणनम् ७ झभञ् ८ घ
ढधष् ९ जबगदश् १० खफछठथचटतव् ११ कपय् ।
१२ शषसर् १३ हल् १४ अज्झीनं परेण संयोज्यम् १५ ८

इति स्वराष्टकं सम्पूर्णम्